प्रतिज्ञा ? एतदपि न बुद्ध्यामहे कर्मणं उपादानं प्रतिज्ञा । सामान्यविशेषवतोऽवधारितस्य वस्तुनः परिग्रहः सिद्धान्त इति ॥

हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

यस्मिन् वाक्ये हेतू द्वौ दृष्टान्तौ द्वौ तद्वाक्यमधिकं निग्रहस्थानमाधिक्यात् ।

तच्च न, दार्ढ्यादित्येके एके—तु ब्रुवते नेदं निग्रहस्थानं दार्ढ्याद्—दार्ढ्यं हि ज्ञाप्यस्य भूयोभिर्ज्ञापकैर्दृष्टं यथा धूमालोकाभ्यामग्नेरिति । न, दार्ढ्यार्थानभिधानात्—भूयोभिर्ज्ञापकैर्दार्ढ्यं भवतीति न दार्ढ्यार्थोऽभिधीयते किं ब्रवीषि दार्ढ्यादिति। सुतरां प्रतिपत्तिर्दार्ढ्यमिति? तदपि तादृगेव, किमुक्तं भवति सुतरामिति । अथ ब्रवीषि द्वे अपि ज्ञापके ?। सत्यं द्वे अपि ज्ञापके। एकेनैवाऽभिधानात् व्यर्थमभिधानं द्वितीयस्य प्रकाशिते दीपान्तरोपादानवदिति । अनवस्था वा प्रकाशितेऽपि साधनान्तरोपादानादिति ॥

( इति स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानप्रकरणम्। )

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥१४॥

शब्दपुनरुक्तं अनित्यः शब्दोऽनित्यः शब्द इति । अर्थपुनरुक्तं अनित्यः शब्दो निरोधधर्मको ध्वान इति ॥

अनुवादे त्वपुनरुक्तमर्थविशेषोपपत्तेः(१) ॥ १५ ॥

नाबाधनादित्येके—एके तु ब्रुवते नेदं निग्रहस्थानमबाधनात् । न हि परीक्षाविधेः पुनर्ब्रुवता किञ्चिद्बाध्यते परप्रतिपादनार्थं च वाक्यप्रयोगः पुनरभिधानेन सुतरामर्थं प्रतिपद्यत इति न निग्रहस्थानं प्रतिपादकत्वात् । सत्यं प्रतिपादयति प्रतिपादितार्थप्रति-

---

(१) न्यायसूचीनिबन्धे सूत्रमिदं न दृश्यते । विश्वनाथपञ्चाननेनापि नावधूतम् ।

पादकत्वात् वैयर्थ्यं स्यात् वैयर्थ्यान्निग्रहस्थानं साधनविषयापरिज्ञानात् न चायं शिष्यो न गुरुस्तस्मान्नायं पुनः प्रतिपाद्यत इति ॥

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् ॥ १६ ॥

पूर्ववन्निग्रहस्थानमिति ॥

( इति पुनरुक्तनिग्रहस्थानप्रकरणम् । )

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १७ ॥

शेषं भाष्ये ।

उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति केचित्— उत्तरेणावस्थानात् उत्तरेण गुणदोषवता मूढत्वामूढत्वं गम्यत(१) इति किं पुनरुच्चारिते नास्ति । अस्ति हि उत्तरे कश्चित्समर्थो दृश्यते न प्रत्युच्चारणे, नासौ तावता निग्रहस्थानमर्हति । यश्चारभ्य स्वपक्षं न निर्वाहयेत् तस्य स्यात् खलीकारमात्रमिति । नोत्तरविषयापरिज्ञानात्—यद्ययं न प्रत्युच्चारयति ? निर्विषयमुत्तरं प्रसज्यते । अथोत्तरं ब्रवीति ? कथं नोच्चारयति तदिदं व्याहतमुच्यते नोच्चारयत्युत्तरं च ब्रवीतीति । अप्रतिज्ञानाच्च-नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यं पश्चादुत्तरमभिधेयमपि तु यथाकथञ्चिदुत्तरं वक्तव्यम् । उत्तरं चाश्रयाभावे न युक्त(२)मिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति ॥

अविज्ञातं चाज्ञानम् ॥ १८ ॥

स्फुटं भाष्ये । अप्रतिपत्तितो निग्रहस्थानम् ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १९ ॥

श्लोकपाठादिभिरवज्ञां दर्शयन्नोत्तरं प्रतिपद्यत इति, तदप्रतिभा नाम निग्रहस्थानं मू(रू)ढत्वादिति ॥

---

( १ ) अमूढत्वं गम्यते—पा० ६ पु० ।

( २ ) उत्तरं चाश्रयाभावेन युक्तम्—पा० ६ पु० ।

कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ २० ॥

यत्र कर्त्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति स विक्षेपो विज्ञेयः यथा रसालया मया भुक्तं प्रतिश्यायकणो मे कण्ठं क्षिणोतीत्येवमादि । तत् कथं निग्रहस्थानम् ? अज्ञाननिगूहनार्थं तु मन्युक्तमज्ञानमेव परिहारेणाविष्करोति ॥

( इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् । )

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २१ ॥

यः परेण चोदितं दोषमनुद्धृत्य भवतोप्ययं दोष इति ब्रवीति सा मतानुज्ञा परमतं स्वमतेऽनु(१)जानाति । उदाहरणं भवांश्चौरः पुरुषत्वादिति स तं प्रति ब्रूयात् भवानपीति सोऽभ्युपगम्य दोषं परपक्षेऽभ्यनुजानातीति निगृहीतो वेदितव्यः अनभ्युपगच्छता(२) न पुरुषत्वं चौर्ये हेतुरिति वक्तव्यम् । किन्तु परस्वेनानतिसृष्टेन सम्बन्धः तद् उत्तरापरिज्ञानान्निगृह्यत इति ।

प्रसङ्गविधानान्न निग्रहस्थानमित्यन्ये—अपरे तु ब्रुवते नैतन्निग्रहस्थानं प्रसङ्गविधानात्—नैवायं पश्चादपि तं दोषं प्रतिपद्यते अपि तु प्रसङ्गं करोति यदि पुरुषत्वाच्चौरो भवति भवानपि पुरुषस्तस्माच्चौर इति । एतत्तु नात एव,—यत एवायमुत्तरे वक्तव्ये प्रसङ्गं करोति, तत एवोत्तरापरिज्ञानान्निगृह्यत इति ॥

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥२२॥

यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो भवति निग्रहस्थानप्राप्तस्यापरिज्ञानात् । नान्यवचनादित्यन्ये— अन्ये ब्रुवते नेदं निग्रहस्थानम् अन्योत्तरस्याभिधानात्—यस्मादसौ निग्रहस्थानप्राप्तं न निगृह्णाति ब्रुवन्नन्यदुत्तरमभिधत्त इति । तच्च

---

(१) स्वमतत्वेनानु—पा० ६ पु० । (२) अनभ्युपगतो—पा०६ पु० ।

नात एव--यत एवासौ निग्रहस्थाने वक्तव्ये अन्यदभिधत्ते ऽत
एव निगृह्यते जानानो ह्यसौ किमर्थमन्यत्र ब्रवीति ॥

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनु-
योज्यानुयोगः ॥ २३ ॥

अनिग्रहस्थान एवाभिधत्ते निगृहीतोऽसीति एतन्निग्रहस्था-
नापरिज्ञानान्निग्रहस्थानमिति ॥

( इति दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् । )

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽप-
सिद्धान्तः ॥ २४ ॥

अस्योदाहरणं स्फुटं भाष्ये । प्रतिज्ञातार्थव्यतिरेकेणाभ्युप-
गतार्थपरित्यागान्निगृह्यत इति ॥

हेत्वाभासाश्च यथोक्ताः ॥ २५ ॥

यथैव विभक्ता लक्षणेन तथैव तेषां निग्रहस्थानभाव इति । त
इमे प्रमाणादय उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये, परी-
क्षिताः शेषेष्विति त्रिविधा तत्त्वस्य परिसमाप्तिरुक्ता वेदितव्येति ॥

( इति कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् । )

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥
यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ(१) ।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥

इति श्रीपरमर्षि-भारद्वाज-पाशुपताचार्यश्रीमदुद्द्यो-
तकरकृतौ न्यायवार्त्तिके पञ्चमोऽध्यायः समाप्तः ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

(१) योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ।
अयं श्लोको न्यायभाष्यान्ते दृश्यते ॥

